ॐ

श्रीशारदाचन्द्रमौलीश्वराभ्यां नमः।

श्रीमत्परमहंसपरिव्राजकाचार्ययोगीन्द्रवर्यआत्मानन्दसरस्वती

स्वामिभिर्विरचितं

# चतुर्विधफलमीमांसादर्शनं।

तदेव।

लोकानुग्रहाय स्वेनैव प्रकाशितम्।

---


मुंबय्यां।

क्षेमराज-श्रीकृष्णदास-श्रेष्ठिनः

स्वकीये 'श्रीवेंकटेश्वर' स्टीम्-यन्त्रालये

मुद्रितम्।

राजगुरुवेदान्तवाचस्पतिछोटूमहाराज तथा श्रीमत्पण्डित

माणिकलाल व्याकरणाचार्य शास्त्रिभ्यां संशोधित।

---

संवत् १९७८ शके १८४३

---

पुस्तक मिलनेका ठिकाना शेठश्रीचतुर्भुज भवानी

दास गुप्त तांबाकांटा, पायधुनी, बम्बई.


---


अस्य ग्रन्थस्य सर्वाधिकाराः राजनियमानुसारेण प्रकाशकैः

स्वाधीनीकृताः सन्ति।

FORT. BANGALORE.

SGDF

Sri Gurgeshwari Digital Foundation



# चतुर्विधफलमीमाँसादर्शनं।

श्रीमत्परमहंसपरिव्राजकाचार्य-योगीन्द्रवर्य-श्रीआ-
त्मानन्दसरस्वतीस्वामिभिर्विरचितम् ।

तदिदं

लोकानुग्रहाय स्वेनैव प्रकाशितम्.


## मुम्बय्यां

श्रीकृष्णदासात्मज-क्षेमराजस्य

स्वकीये "श्रीवेंकटेश्वर" ( स्टीम् ) यन्त्रालये

मुद्रितम् ।

संवत् १९७८, शके १८४३.


Sri Gargeshwari Digital Foundation



श्रीमत्परमहंसपरिव्राजकाचार्य योगीन्द्रवर्य
श्रीआत्मानन्दसरस्वती स्वामिनः ।

SGDF
Sri Gangeshwari Digital Foundation








# चतुर्विधफलमीमांसादर्शने

## प्रस्तावना ।



इह खलु संपादनीयेषु धर्मार्थकाममोक्षाख्येषु चतुर्विध पुरुषार्थेषु प्रथमो धर्म एवेति मूलसम्मततया समाद्रियते धार्मिकवरैः सोऽयं धर्मो वेदप्रतिपाद्य इति वेद एव सर्वस्वंनामास्तिकधुरन्धराणाम्। तस्य च भ्रमप्रमादादिदोषदूषितस्वान्तैरवाग्दृष्टिभिर्न यथार्थेनार्थोऽवगन्तुं शक्य इति परमकारुणिक भगवज्ज्ञाननिधिमहर्षिबादरायणाचार्यैर्निगमागमपुराणादिमन्वादिप्रणीतस्मृत्याविरुद्धप्रमाणानियानिकानिवेदाचार्यप्रबन्धतया विरचितानि तानि हितानुकूलानि । अद्यापि भारतीयानिवासिनां चतुर्वर्णानामाश्रमोचितत्वेन विहितसरणिः "यन्मनुरवदत्तद्भेषज"मित्युक्तेः । तद्व्यातिरिक्तकालदोषदूषितान्तःकरणतया पिशुनमार्गाणां स्वविद्याराहितानां परधर्मकुमतिविपरीतभावानां किमाश्चर्यमिदमहो कलिगतपाखण्डताण्डवब्रह्मद्वेषपराः प्रायशः गुप्तदासादयो अनाचाररताः देशकण्टकशठाः आचार्य-

SGDF
Sri Gargeshwari Digital Foundation

विप्रद्वेषपराश्च परिदृश्यन्ते । "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधिं परित्यज्य म्लेच्छचाण्डालैः संघटितनूतनगुप्ताचार्याचरणेन नवजीवनकुमतिवशेन वा वर्णाश्रमाभासो वरीवर्त्तते तथा माभूद्वर्णाश्रमविहितं कर्म न परित्यक्तव्यमित्याशयदृढीकरणार्थं काव्यकोशद्वारेण श्रुतिस्मृतिवाक्योपदेशेन स्वकुलद्वारानुष्ठाननिष्ठाशान्तिनियमेन येनकेन प्रकारेण वा भारतीयसभ्यस्वकुलवर्णाश्रमाचाररक्षणार्थमेवेदं "चतुर्विधफलमीमांसादर्शनम्" "वेदान्तशास्त्रमकरन्दः" "स्तोत्रकर्णामृतम्" इत्येतद्ग्रन्थत्रयं व्यरचि नान्यत्कार्यगौरवेणेति साम्प्रतं पारमार्थिकबुद्ध्या त एते ग्रन्थाः मुद्रापिताः सर्वसभ्यसन्मार्गहितोपदेशाविष्करणार्थं तरणसरणितया सन्ति । पूर्ववेदाचार्यपरम्परागमसिद्धाद्वैतपद्धतिमनुसृत्य प्रबन्धग्रथनं यथा स्यात्तथानुमोदितसरणीनां ग्रन्थानां स्मरणमाचार्यश्रेयस्करमामनन्ति स्म ।

भविष्यति न दृष्टं च प्रत्यक्षस्य मनागपि॥
सामर्थ्यं नानुमानादेर्लिङ्गादिरहिते क्वचित् १

इति बहिर्विषयप्रतिपादनात्
तदभावकृता मतिसंवृतिः॥
उभयतत्त्वविदां परमार्थतः
क्षममिदं धुरिधर्मविचारणे ॥ २॥

SGDF
Sri Gargeshwari Digital Foundation



# चतुर्विधफलमीमाँसा मंगलाचरणम् ।
## गुरुपञ्चदशी ।

वादे निरस्य निखिलप्रतिकूलपक्षं
कर्मांगवादविधिखण्डितमण्डनो यः ॥
वेदान्तभाष्यगरिमायति सार्वभौमो
मोहान्धकारमलिनान्विमलीचकार ॥ १ ॥
श्रीशंकरो यतिवरः परमेश्वरश्च
गोप्यावतारपदकंजनिकुंजभृङ्गाः ॥
शिष्यास्तदीयभुजपद्मपदाभिमुख्या
स्तान्प्रत्यहं गुरुवराश्च पुनन्ति विश्वम् ॥ २ ॥
व्याख्यातृभिर्बहुविधैः श्रुतियुक्तिवादैः
श्रीबादरायणकृते विधिसूत्रभाष्ये ।

SGDF
Sri Gargeshwari Digital Foundation

शास्त्रप्रमाणसरणिश्रुतिमस्तकाग्रै-
र्लोकान्पुनन्ति गुरुशंकरदेशिकेन्द्राः ॥ ३ ॥

काणादकापिलसुजैमिनिगौतमाद्या
वात्स्यायनोप्यथ कुमारिलभट्टमुख्याः ।
सूत्रप्रबन्धमतभेदविमोहकारा-
श्छिन्दन्ति ताँस्तदितरानपि सूत्रभाष्ये ॥ ४ ॥

कौलादिकक्षपणबौद्धजिनादिसर्प-
द्वैतप्रमाणगणभक्षकवैनतेयम् ।
आर्यानुपूर्वश्रुतिकल्पतरौ वसन्तं
श्रीमद्गुरुं यतिवरं प्रणतोस्मि नित्यम् ॥ ५ ॥

कापालिकासुरविभेदकशूलपाणिं
सद्यःप्रमत्तमतकौलविनाशको यः ।
पाखण्डशौण्डमतभित्परशुं दधानं
श्रीशंकरं परमकारुणिकं नमामः ॥ ६ ॥

अद्यापि शंकरमतस्यकुतर्ककेलिं
कर्त्तुं त्विहास्ति न परत्र गुरुप्रवीरः ॥
भद्रासनस्थितजगद्गुरुशंकरस्य
लोकेश्वरस्य महिमानमहो विचित्रम् ॥ ७ ॥

अद्यापि शंकरजगद्गुरुणोद्धृता या
कैवल्यभूमिरचला विमला च कीर्तिः ॥

SGDF
Sri Gangeshwari Digital Foundation

लब्ध्वाथ भारतमहोत्सवसुप्रकाशा
धात्रीसुधात्रिवरदात्रिरहो धरित्री ॥ ८ ॥
लोकत्रयार्त्तिहरणं शरणागतानां
आनन्दकोशमकरन्दमिलिन्दकन्दम् ॥
वृन्दारकादिसुरवृंदमुनीन्द्रवृन्दैः
संतर्पितांघ्रिकमलं सहसाहमीडे ॥ ९ ॥
हा हन्तहन्तकपटच्छलिनः सपत्नाः
कैवल्यहीनकलह प्रतिमैव भूमौ ॥
वर्णाश्रमाधिकरणे विदिताद्वितीयं
द्वैतं परात्मनि वदन्ति त्रुटन्ति धर्माः ॥ १० ॥
भोईश शंकर गुरो करुणावतार
कीयद्विलंबमधुनातनरक्षणाय ॥
संकीर्णसंकरकलिंदपुलिन्दवृन्दैः
संहाररुद्रकलयाप्यवतीर्य आस्ताम् ॥ ११ ॥
श्रुत्यामनर्थरचनां स्वमतप्रतिष्ठां
कुर्वन्ति गर्वपरितोषकरा जगत्याम् ॥
पाखण्डखण्डनवर प्रचुर प्रचण्ड
श्रीकण्ठदण्डपरशुं प्रणतोस्मि नित्यम् ॥ १२ ॥
कंदर्पकोटिदमनं कमनीयरूपं
कान्तिच्छविच्छलनदण्डकरामशोभम् ॥

SGDF
Sri Gargeshwari Digital Foundation

पाखण्डखण्डनगुरुत्वमहस्वरूपं
श्रीशंकरं गुरुवरं प्रणतोऽस्मि नित्यम् ॥ १३ ॥

पाखण्डदर्पदलने नलिनीव जिह्वा
मातङ्गमत्तपरिमर्द्दनकेसरीव ॥
कालाय जीवपरभेदनिकृन्तनाय ॥
कैवल्यहस्तपरशुं मनसा स्मरामि ॥ १४ ॥
ये के च न क्षितितलेऽत्र तु शंकरस्य
अद्वैतभाष्यकणिकां पिबते मनुष्यः ॥
तापत्रयाग्निशमनं भवरोगवैद्यं
कैवल्यमाश्नुतपरं न पुनर्भवाय ॥ १५ ॥
नित्यं जपस्व गुरुपञ्चदशीं जगत्या-
मग्रेसरस्य गुरुशंकरदेशिकस्य ॥
मृत्युञ्जयस्य परितोषकरीं तदीयः
सर्वार्थसिद्धिसहजैव भवेत्सुभक्तः ॥ १६ ॥

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै ।
तंऽहमात्मबुद्धिप्रकाशंसुमुक्षुर्वै शरणमहं प्रपद्ये ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्ययोगीन्द्रवर्यआत्मानन्दसरस्वतीस्वा-
मिभिर्विरचितं गुरुपंचदशीमंगलाचरणं संपूर्णम् ।

---

SGDF
Sri Gargeshwari Digital Foundation



# चतुर्विधफलमीमांसादर्शनम्

श्रीमत्परमहंस परिव्राजकाचार्य योगीन्द्रवर्य-
आत्मानंद सरस्वती स्वामिभिर्विरचितम् ।

यः पूज्यो यतिभिः स्वधर्मनिरतैर्ध्यायन्ति यं योगिनो
येनान्तं निगमान्तवेद्यमनिशं यस्मै हविर्दीयते॥
यस्मात्स्थावरजंगमं समभवद्यस्यांशमात्रोवरो
यस्मिँल्लीनमिदं प्रणौमि सततं श्रीचंद्रमौलीश्वरम्॥ १॥

शाक्तान्पाशुपतानपि क्षपणकान्कापालिकाऽनर्हतान् ।
कौलान्वैदिकदूषकानपि पराजित्वाथ वेदोदितम् ॥
रक्षायैच यतोवतीर्ण परमः श्रीशंकरः शंकरः ।
श्रीमद्द्राविडभूसुरः सुरवरः श्रीमद्गुरुं चिंतये ॥ २ ॥

अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान् गुरुं
श्रीमच्छंकरयोगिपुंगवमहापूर्णेन्दुभाभास्वरम् ॥

SGDF
Sri Gargeshwari Digital Foundation

विद्वत्कैरवसौरभः श्रुतिवचःपाखंडचंडार्दितः
श्रीमल्लोकगुरुं प्रणौमि सततं श्रीशंकरार्यं परं ॥ ३ ॥

ब्रह्माण्डनगरे रम्ये यन्त्रारूढे महत्तरे ।
चतुर्वर्गफलाकीर्णे चतुर्मार्गाश्च भूपुरे ॥ १ ॥
निसर्गदुर्गसंकाशे विचित्रनगरोपमे ।
चत्वारो गोपुरद्वाराः समावृत्य वसुन्धराम् ॥ २ ॥
धर्मार्थकाममोक्षाणां फलप्रदविलश्रियः ।
मार्गद्वारे फलप्राप्तिर्योजनीया यथा बुधैः ॥ ३ ॥
प्राच्यां प्राचीनमार्गेण महाद्वारेण प्रायशः ।
अन्तः प्रवेष्टुं नगरे ब्रह्माण्डाख्ये पुरातने ॥ ४ ॥
गुणत्रयसमाकीर्णे वर्णाश्रमसमावृते ।
वेदशास्त्रपुराणादिमणिस्तंभसमान्विते ॥ ५ ॥
तत्र पूर्वपरीक्षायां वर्णाश्रमपुरोगमः ।
धर्ममीमांसको वर्णिविग्रहः कर्मतत्परः ॥ ६ ॥
सत्यधर्मपरो धीरो नित्यकर्मपरायणः ।
पूर्वद्वारं समावृत्यो त्थायतिष्ठतिनैष्ठिकः ॥ ७ ॥
वर्णाश्रमसमाकीर्णे भारतीये पुरातने ।
धर्ममीमांसकाः सर्वे पूर्वाशिक्षापरीक्षकाः ॥ ८ ॥
बालानां सुखबोधाय पित्रोश्चाप्यतिथिक्रियाः ।
गुरुसेवापरो भूत्वा पूर्वाभ्यास सनातनम् ॥ ९ ॥

SGDL
Sri Gargeshwari Digital Foundation

तेषां परीक्षकास्तत्र पूर्वद्वारे विलोत्तमे ।
सर्वेषां कालगत्यैव मेलनं नगरे महत् ॥ १० ॥
प्रदर्शनं च सर्वेषां पूर्वद्वारे महत्तराः ।
भारतीयमहासभ्याः प्राच्यां धर्मप्रवर्तकाः ॥ ११ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्येऽत्र पंचमाः ।
म्लेच्छाश्च नास्तिकाः सर्वे पुनरायान्ति यान्ति च ॥ १२ ॥
एवं वर्णसमाचारं षड्दर्शनसुसंमतम् ।
कलौ समुल्लंघयाति पाषंडे पंचमान्प्रति ॥ १३ ॥
संयोगमेलनं कर्तुं वैश्याः शूद्राश्चउद्यताः ।
नास्तिका मार्गविभ्रंशविद्याहीना विनाशकाः ॥ १४ ॥
जातिद्रोहपराःकेचिद्वेदशास्त्रार्थनिन्दकाः ।
ब्राह्मणद्वेषकाःसर्वेऽविद्याव्याख्यानतत्पराः ॥ १५ ॥
पूर्वद्वारं समाविश्य तर्ककर्कशचिन्तकाः ।
विद्यासंस्कृतलोपाश्च म्लेच्छविद्याविशारदाः ॥ १६ ॥
पूर्वद्वारे महादुर्गे योद्धारः सन्ति साम्प्रतम् ।
ब्राह्मणानां सभालोपो नाद्यापि प्रलयं गतः ॥ १७ ॥
देवताः सरितः सर्वे वैदिका वेदपारगाः ।
यावद्भारतपृथ्वी स्यात्तावत्तिष्ठंति धार्मिकाः ॥ १८ ॥
वेदशास्त्रपुराणानि यावात्तिष्ठति मेदिनी ।
तावद् ब्राह्मणगुर्वीति सर्वे गृह्णंतु मानवाः ॥ १९ ॥

SGDF
Sri Gargeshwari Digital Foundation

वर्णाश्रमसमापन्ने वर्णानां ब्राह्मणो गुरुः।
धर्मार्थकाममोक्षाणामादिधर्मो हि नान्यथा ॥२०॥
धर्मशास्त्रविहीनाश्च भविष्यंति कलौ युगे।
वेदशास्त्रपुराणानां निन्दका अन्यचिन्तकाः॥ २१॥
ब्राह्मणद्वेषिणस्सर्वे वैश्याः शूद्राश्च पंचमाः।
नास्तिका म्लेच्छसंकीर्णकुलाधमकलिप्रियाः॥ २२॥
अतिवर्णाश्रमाचारा नीचा ब्राह्मणशिक्षकाः।
ओतं प्रोतं च सर्वेषु सूत्रे मणिगणा इव॥ २३॥
ब्रह्मविद् ब्रह्म एवाहमिति मत्वा प्लुवन्ति ते।
धर्ममीमांसयाहीना वाक्यच्छलवितण्डिनः॥ २४॥
संस्कारसंस्कृते शून्याः पामराश्च विमोहितुम्।
कालगत्यैव पाषण्डाः पापबुद्ध्या द्विषन्ति ते॥ २५॥
धर्मद्वाराविरोधे ये दुर्मदांधा बहिष्कृताः।
कलिकालस्य पाषण्डाश्चाण्डालस्पर्शलालसाः॥ २६॥
स्वविद्यानियमांधास्ते परविद्याकुबुद्धयः।
प्राचीनमार्गविद्वेषाः शठाः कुप्यन्ति काकवत्॥ २७॥
का कथा काकवत्तेषां कालदोषेण हेलनम्।
बोधयामीह पूर्वेऽस्मिन्धर्मद्वारेपदाभिधे॥ २८॥
कुलवर्णाश्रमाचाराः श्रुतिस्मृतिपरायणाः।
दैवीसंपत्समाश्रित्य वर्ततां तेन काक्षतिः॥ २९॥

SGDF
Sri Gurgeshwari Digital Foundation

राष्ट्रभ्रष्टे महाराष्ट्रे धार्तराष्ट्रैव राष्ट्रियाः ।
शकुनीव पराभूता पाण्डवानान्तु काक्षतिः ॥३०॥
परमात्मा परित्राता पाण्डवानां यथा पुरा ।
तथैव भारतीयानां परमात्मा परागतिः ॥ ३१ ॥
स्वराष्ट्रविद्या कर्तव्या मतिमान्धृतिमान्यदि ।
परापवादं नो कुर्यात्प्राणैः कण्ठगतैरपि ॥ ३२ ॥
धर्मार्थकाममोक्षाणामादिधर्मो हि नापरः ।
तस्मात् सर्वप्रयत्नेन धर्मंनोल्लंघयेद्बुधः ॥ ३३ ॥
अस्मिन्द्वारे पदभ्रष्टाः द्वारेभ्यश्च पतंत्यधः ।
धर्मद्वारफलेनैव सर्वद्वारफलं लभेत् ॥ ३४ ॥
वेदशास्त्रपुराणादि गुरुमाश्रित्य यत्नतः।
समभ्यस्य फलान्येतान्यादाय च बली भव ॥ ३५ ॥

इति श्रीचतुर्विध फलमीमांसापूर्वद्वार समाप्तः ।

## अथ दक्षिणद्वारयात्राप्रवेशः ।

कुलवर्णाश्रमाचारनिर्णयं तावदाचर ।
परधर्मेण कल्याणं नैव सिध्यति मानद ॥३६॥
ततः पक्वमना भूत्वा शैशवान्तेऽर्थसंग्रहे ।
गार्हपत्यं समाधातुं दक्षिणद्वारमाविशेत् ॥ ३७ ॥
नीतिशास्त्रं समभ्यस्य विषयेषणतत्पराः ।

SGDF
Sri Gargeshwari Digital Foundation

पुत्रवित्तगृहक्षेत्रमित्रवृन्दैरनाकुलम् ॥ ३८ ॥
दक्षिणद्वारमासाद्य दक्षत्वं तत्र चाभ्यसेत् ।
शांतिदांत्यादिभिः सार्धं क्षमार्जवसमन्वितम् ॥ ३९ ॥
अर्थमित्यत्र चैश्वर्यं गार्हपत्येन संयुतम् ।
पंचयज्ञपरो भूत्वा वैदिको वेदपारगः ॥ ४० ॥
श्रौतस्मार्ते विदक्षत्वं दक्षिणद्वारकौशलम् ।
अनेनार्थपदेनैव शब्दा बह्वर्थसूचकाः ॥ ४१ ॥
आर्तो जिज्ञासुरर्थार्थी ह्यत्र कोर्थः प्रतीयते ।
तत्रार्थपदमुद्दिश्य धनैश्वर्यं प्रचक्षते ॥ ४२ ॥
आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ ४३ ॥
पंचयज्ञपरो भूत्वा वैदिको वेदपाठकः ।
गार्हपत्याग्निसंयुक्तो ह्यर्थं संपादयेद् बुधः ॥ ४४ ॥
शूद्राः पौराणिकोक्तेन पंचमाः पतितादयः ।
पुराणोक्तेऽपि चैतेषां नास्ति कर्म कदाचन ॥ ४५ ॥
तीर्थस्नानं च दूरेण देवदर्शनमेव वा ।
संकल्पविधिहीनेन कुर्यादित्येकसम्मतम् ॥ ४६ ॥
देवालयबिलद्वाराद्बहिरेव निदर्शनम् ।
तेषामन्तः प्रवेशस्तु कदाचिन्नैव सिध्यति ॥ ४७ ॥
एतेषां तु समाचाराः प्रोक्ता लौकिकवैदिकाः ।
वैदिकाचार्यमान्येन कर्तव्यो नान्यथा भवेत् ॥ ४८ ॥

SGDF
Sri Gargeshwari Digital Foundation

बहिर्द्वीपगते वैश्यब्राह्मणक्षत्रियानपि ।
तीर्थयात्रां विना गच्छेत्पुनस्संस्कारमर्हति ॥ ४९ ॥
जातिहीनाश्च चांडाला नास्तिका म्लेच्छजातयः ।
सेवा एव द्विजातीनां नान्यत्र शरणं भवेत् ॥ ५० ॥
वेदसंस्कारहीनानां शासनं शास्त्रचोदितम् ।
अर्थसंपादनं कृत्वा व्ययं कुर्याद्यथाविधि ॥ ५१ ॥
जातिवर्णाश्रमाचारविधिना निगमागमैः ।
ब्राम्हणायज्ञकामारते हव्यकव्यादिभिः क्रमात् ॥ ५२ ॥
देवार्चनहुतादीनां व्ययं कुर्वन्ति ब्राह्मणाः ।
एतादृशव्ययोपिरयाज्जेतुकामाश्च क्षत्रियाः ॥ ५३ ॥
वैश्यानां व्यवसायस्तु व्ययं कुर्यादतंद्रितः ।
शूद्राणां गृहपूर्त्यर्थं तीर्थसेवातिथी क्रमात् ॥ ५४ ॥
ब्राम्हणद्वारयज्ञादि सच्छूद्रेपि यथाक्रमम् ।
वैश्यानां व्यवसाये वा यज्ञसत्कर्मसिद्धये ॥ ५५ ॥
अर्थस्य व्ययमुदिश्य धनं संपादयेद्वरम् ।
भारते नगरे रम्ये रत्नमण्डपसंमिते ॥ ५६ ॥
दक्षिणद्वारपर्याप्ते साधयेदर्थसंपदः ।
तस्मात्संपादयेदर्थं चतुर्भिर्वर्णपाटवैः ॥ ५७ ॥
प्राक् संस्कारानुपूर्वं विधिविधुरधियः श्रद्धया संयजन्ते ।
दानाहारक्रियाद्यैस्त्रिगुणविधिवशात्तत्फलं ते लभन्ते ।

SGDF
Sri Gargeshwari Digital Foundation

तद्वैगुण्यं निहन्तुं प्रभवति तदों तत्सदेतात्त्रिवर्णी ।
तेन ब्रह्मार्पणं स्यादिदमिति भगवद्गीतवाक्यामृतेन ५८॥

इति श्री चतुर्विधफलमीमांसादक्षिणद्वार समाप्तः ।

---

# अथ पश्चिमद्वारयात्राप्रवेशः ।

सकाम्यफलमुदिश्य पश्चिमद्वारमण्डपे।
सर्वेषां मेलनं चात्र महदद्भुतभारते ॥ १ ॥
नित्यं नैमित्तिकं काम्यं एवं तत्त्रितयं पथि ।
नित्यं पूर्वपथि ज्ञेयं धर्मशास्त्रविशारदम् ॥ २ ॥
नैमित्तिकं दक्षिणस्यां पथि गत्वा ततः परम् ।
काम्यं पश्चिममासाद्य उपविश्य यथाक्रमम् ॥ ३ ॥
शास्त्राचार्याविरोधेन स कामं साधयेद्बुधः ।
वेदशास्त्रार्थसंपन्ना वर्णाश्रमपुरोगमाः ॥ ४ ॥
कलिकाले तु संप्राप्ते बलहीना द्विजातयः ।
त्रैवर्णाः संकराकारास्तत्र रक्षति शंकरः ॥ ५ ॥
क्षत्त्रिया वैश्यशूद्राद्या ब्राह्मणो परिक्रुद्धिताः ।
कालपाषण्डआयाते लुप्यन्ते निगमागमाः ॥ ६ ॥
आरोपयन्ति विप्राणामाक्षेपं च सहस्रशः ।
भविष्यति कलौ यत्र म्लेच्छानां क्षितिपालने ॥ ७ ॥

SGDF
Sri Gangeshwari Digital Foundation

अर्थहीनो भवेद्विप्रो ह्याग्निसेवा च लुप्यति ।
नीचसेवापरो भूत्वा कालसन्ध्यापि दुर्लभा ॥ ८ ॥
गौतमस्य तु शापेन सफलो विफलीभवेत् ।
अत्र चिन्तापरो भूत्वा किमर्थं दुःखितो भुवि ॥ ९ ॥
आनिवार्यास्तु भूदेवाः कः शक्नोति निवर्तितुम् ।
मत्पूर्वजैः कृतं कर्म चरितं चारुविक्रमैः ॥ १० ॥
भृगुर्वसिष्ठमुख्यादि कुंभजोप्यत्रिगौतमाः ।
जामजग्न्यमरीची च दुर्वासांगिरसः क्रतुः ॥ ११ ॥
मनुः पुलस्त्यमार्कण्डौ भरद्वाजश्च लोमशः ।
अन्येपि बहवः शूराः शापादपि शरादपि ॥ १२ ॥
त्रैलोक्यरक्षको दक्षः शौर्यवीर्यपराक्रमी ।
एतेषां पूर्वजानां च स्मरणादेव केवलम् ॥ १३ ॥
सर्वथा सर्वकार्येषु विजयो नात्र संशयः ।
ऋतंभरत्वमासाद्य हे विप्रा फलसिद्धये ॥ १४ ॥
प्राणसंयमिनो भूत्वा ध्याननिष्ठा भवंतु च ।
नोचेद्व्यर्थं सजीवस्य जीवनं धिक् पराक्रमम् ॥ १५ ॥
प्रायोपवेशनं कार्यं नोचेदन्यं न मन्यसे ।
क्षात्त्रनष्टस्य लोकस्य स्थावरस्य चरस्य च ॥ १६ ॥
ये केचिच्छूद्रराजानो भारतीये वसन्ति ते ।
ते तु वेदोक्तमिच्छन्ति हितद्वेषिपराश्रयाः ॥ १७ ॥

SGDF
Sri Gargeshwari Digital Foundation

यदि चेद्ब्राह्मणद्वेषिकामिनीकामकिंकराः ।
दुराचाररतास्सर्वे सनातनबहिष्कृताः ॥ १८ ॥
किमर्थं पूर्वजानां च अकीर्तिकरजीवनम् ।
मरिष्ये पश्चिमे द्वारे करिष्ये किं पराक्रमम् ॥ १९ ॥
सर्वेषां यज्ञसान्निध्यं ब्राह्मणेनैव सिध्यति ।
तत्र द्रष्टव्यमासाद्य ब्राह्मणानां पराक्रमम् ॥ २० ॥
इन्द्रायतक्षकायेति सर्पसत्रे समंत्रके ।
देवराजोपि संप्राप्तो वीतिहोत्रे हुतांशवत् ॥ २१ ॥
मंत्रविद्ब्राह्मणैः पूर्वं कारयामास ते पुरा ।
काककुक्कुटमार्जाराः किं ते कुर्वन्ति याज्ञिके ॥ २२ ॥
उत्तिष्ठन्तु द्विजास्सर्वे कुशमादाय यत्नतः ।
गन्तव्यं पश्चिमद्वारे यज्ञकोलाहले जवम् ॥ २३ ॥
तत्पश्चात्कामसंकल्पफलं नेतुं प्रयत्नतः ।
उत्तिष्ठोत्तिष्ठ गन्तव्यं पश्चिमद्वारभूतलम् ॥ २४ ॥
वराभयकरो भूत्वा निवेशमणिमन्दिरे ।
पश्चिमद्वारमासाद्य यथाकामं यथाविधि ॥ २५ ॥
प्राजापत्यं वाजपेयं षोडशीयमतःपरम् ।
आप्तोर्यामा अग्निषोमि अत्यग्निष्टोममेव वा ॥ २६ ॥
अतिरात्रं च हौत्रं च सौत्रामण्यादयस्तथा ।
कुर्वन्तु यज्ञान्बहवः नित्यं सत्यपरायणाः ॥ २७ ॥

SGDF
Sri Gargeshwari Digital Foundation

स्वर्गकामाय पुत्राय पशुकामा यशोर्थिनः ।
आत्मकामाय सोमादि यथाविधिहुताग्निनाम् ॥ २८ ॥
वैदिकाचार्यविध्युक्तं साधयेदात्मसंयमी ।
चरेदवभृथं तत्र रत्नाकरतटे शुभे ॥ २९ ॥
पूर्णाहुत्याःपूर्वमेव दिग्पेभ्यो दीयताम् बलिः ।
इष्टदेवस्य सान्निध्यं मे भूयाज्जन्मजन्मनि ॥ ३० ॥

अस्मिन्महानगरभूपुरचक्रवाले
धर्मार्थकाममितियत्रितथीकपाटे ।
रत्नाकरस्य तनया उटजांगणे या
अम्बापुरे दिशति तांप्रणतोस्मि नित्याम्॥३१ ॥
दिक्चक्रवार्तिरजनीपातिदिव्यकान्त्या
सन्जीवयत्यखिलभूतलपालनश्रीः ।
अम्बापुरी नगरनर्तकरी परा या
जंभारिरत्नरमणीयकलां पुनातु ॥ ३२ ॥
संभोगलक्ष्म्या परहस्तगतां निरीक्ष्य
संसाररक्षणपरास्तु पणं दधाना॥
सन्धीकरोतु कलहं निजराजलक्ष्मीः
संभावयामि सततं हतचेतसःस्मः ॥ ३३ ॥
किं कर्तुमंबरगतश्च विमानमार्गे
राज्याधिपत्यविपदोजननाशकानि ।

SGDF
Sri Gargeshwari Digital Foundation

एतानि तानि दुरतिक्रमविक्रमानि
चक्रे महाकपटनाटकचक्रवर्ती ॥ ३४ ॥
त्वय्यम्ब तप्तकनकोज्ज्वलकान्ति भान्ति
क्षेमप्रदानि भुवनानि चतुर्दशानि ।
भोगप्रदानि निजराजपदप्रदानि
सानन्दितानि कुरु मां करुणाकटाक्षे ॥ ३५ ॥
आपत्कलाश्रयविचित्रचरित्ररूपा
रत्नाकरस्य तनया निजराजलक्ष्मीः ।
त्वामंब मोहमयिपाश्रमगोपुराग्रे
तिष्ठत्यनिष्टहरिणी भरिणी च विश्वम् ॥ ३६ ॥
आचक्रवर्तिपदवीं हरिताश्वकेतुं
वृंदारकाधिपतिदैवतकान्तिकान्ताम् ।
मन्दस्मितां सुदतिकुड्मलकुन्दकान्तिं
मंदेतरं दिशतु मामकमंबुजाक्षि ॥ ३७ ॥
अम्बापुरे सपदि सांप्रतमातनोति
शंभुस्वयंभुहरयो हरिताश्वकेतुम् ॥
संप्रत्यहं तव पदांबुरुहस्य सेवां
संसाधयन्ति सुरपादपपादमूले ॥ ३८ ॥
आलस्यलालसधरातलभारताया-
न्सालोक्यराजकपटच्छलितरसपत्नान् ॥

SGDF
Sri Gargeshwari Digital Foundation

आलंबनं झटिति यद्भगदत्तमुख्यान्
पारं पलायितुमनुज्ञपनं च देहि ॥ ३९ ॥
आकुंचितांघ्रिकमला विमला च लक्ष्मी-
दैत्यार्दिनी विजयकेतुचलत्पताकाम् ॥
कालानलप्रचुरभीतिकरी कराग्रे
आलोकयामि त्वरितं हरितः प्रकाशाम् ॥ ४० ॥
जंभारिरत्नमुकुटां चटुलां त्रिनेत्रां
शंभुस्वयंभुहरितोषकरीं च हास्याम् ।
संभावयामि शरणं शरणार्तिहन्त्रीं
देवीं समस्तजननीं जगदीश्वरीं ताम् ॥ ४१ ॥
कालेन कामफलदा भव सा महेशी
कालक्रमेण कलिदोषकलामुपोह्य ।
आर्तप्रशस्तवरदानकरावलंबं
शास्त्रप्रशासनमलंकुरु याज्ञिकानाम् ॥ ४२ ॥
इत्येवमादिदशकस्तुतिपाठकेन
दिक्पालदेवबलिदानविधिं चकार ।
यत्क्षेत्रपालबलिदानविधानमार्गे
कल्कट्टविष्टरसुपुष्टिकरे चकार ॥ ४३ ॥
यत्क्षेत्रपालबलिना सकलाश्च देवा-
स्तृप्तिं प्रयान्तु भुवने भुवनेश्वरी सा ॥


...RAJENDRA SAMSKRIT...
वाणी भजत गैर्वाणी
LIBRARY
...RT, BANGALO...

SGDF
Sri Gargeshwari Digital Foundation

धर्मार्थ कामफल मोक्षपरंपरायाम् ।
देवी चतुर्भुज महोत्सुकदानशक्त्या ॥ ४४ ॥
घोराट्टहासजनितां ललनां च जिह्वां
देवीं जनार्दनकरीं हरितालयन्त्रीम् ।
कल्कत्तहस्तमहिपालकरीं च कालीं
संतर्पयामि शरणं शरणार्तिहन्त्रीम् ॥ ४५ ॥
पक्षद्वंद्वविराजितोहममलो मीनप्रसेवी सदा
पुष्टांगः सकलादिषु परिगतश्चन्द्रःसमः किं मम ।
सर्वस्थाणुशिरोगतोहामिति यश्चन्द्रं बको हास्यते
हाकष्टं खलु दुर्जना नरवरा ये विप्रविद्वेषिणः॥ ४६ ॥
यज्ञादिक्रियविद्रुहः प्रतिदिनं तीर्थाटने चालसा
विप्राद्यातिथिपूजने विमुखतासत्कर्मवेदोक्तिषु ॥
सत्यज्ञानविहीनतापरिणतास्तैः कर्मसम्पादिताः
मत्वा वैदिकनैष्ठिकाः क्षितितले हा हंत हंताधुना॥४७॥
कालस्यानुगतिः किमत्र बहुशःसा केन हेलायते
विप्रद्वेषणतत्परा बहुजनास्तैराद्दताः साम्प्रतम् ॥
एणांकेन समो भवेद्गुणलतानक्षत्रवृन्दान्बहून्
कृत्यं चाटुलताण्डवस्य तु गुरुः को वा भवेद्भारते ॥४८॥
पारुष्यं न कदापि मानसगते विप्रद्रुहे त्वाम्प्रति
सर्गासर्गनिसर्गकालमहिमा ब्रह्मण्यहं चिन्तये ॥
स्वर्गारोहणविक्रमक्षितिपतेर्नैवास्ति कश्चिज्जनो
विद्रोहं कुरुतां मदान्धमनसा किं तेन संतापतः॥४९॥

SGDF
Sri Gargeshwari Digital Foundation

मानं दास्यति मानधात क्षितिपः प्राचीनकालस्थित-
स्तत्सूनुर्मुचुकुंदसुंदरमणिः प्रोद्धारदुःखातुरे ॥
निद्राभक्षणमत्यजत्प्रतिदिनं देवार्थचिन्तापर-
स्तद्वाद्विक्रमसक्षात्रधर्मनिपुणः को वास्ति सद्धर्मणि॥५०॥
विद्धि त्वं क्षत्रियाणां कुलरिपुजनितेक्षत्रियानावशिष्टा
यः पूर्वं जामदग्न्यः कुलविपुलबली भार्गवो ब्राह्मणेन ।
तत्पारुष्यं निरीक्ष्य क्षितिपतिनिकरान्ब्राह्मणान्निन्दयन्ति
अद्यापि त्वां हनिष्यत्यथ निरयगता भूमिपान्भूसुरैश्च५१
विप्रद्रोहं कदापि न खलु युगयुगे नैव ते पक्षपातं ॥
ये कुर्वन्त्यन्धदृष्ट्या सदसदनियमास्ते पतन्त्यन्धकूपे ।
सर्वेषां गुरुरेव भूसुरवरस्सर्वेहि काले सताम्
दुर्मोहाच्च्यवते कलंककुलजाः कैवल्यहीनाःकलौ ॥५२॥

स्मृतिरपि ।

श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिवर्धते ॥५३॥
अविद्यो वा सविद्यो वा ब्राह्मणो मम दैवतम् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ ५४ ॥
न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।
न चास्योपदिशेद्धर्मं नचास्य व्रतमादिशेत् ॥ ५५ ॥

SGDF
Sri Gargeshwari Digital Foundation

कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षराविचारेण शूद्रश्चांडालतां व्रजेत् ॥ ५७ ॥
वर्णाश्रमेषु ये धर्माः शास्त्रोक्ता नृपसत्तम ।
तेषु तिष्ठन्नरो याति धर्मतां नान्यथा भवेत् ॥५८॥
विधर्मः परधर्मश्च आभास उपमा छलः ।
अधर्म शाखाः पंचेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥ ५९ ॥
यतीनां ब्रह्मचारीणां ब्राह्मणांश्च विदां सताम् ।
यावन्निन्दापरो याति तावत्क्लिश्यन्ति भारते ॥ ६० ॥
भारतीयमहासभ्यास्संमेलनपुरस्सरम् ।
उदीच्यानां महाद्वारे द्वारकायां कुशस्थले ॥ ६१ ॥
क्षेत्रे पिंडारके मान्ये भूवैकुण्ठे समागमे ।
महासभ्यसभामध्ये सानन्दिये मनीषिणाम् ॥ ६२ ॥
प्रभातस्नाननिष्ठादि प्रभातक्षेत्रसन्निधौ ।
हव्यकव्यादिकं कर्म समाप्याथ सभासदः ॥ ६३ ॥
हर्षमानससंपूर्णाः सर्ववर्णपुरोगमाः ।
आश्रमाणां विचारं हि कस्मात्कार्यमिति ब्रुवन् ॥६४॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राणां च यथाक्रमम् ।
आश्रमाचरणं सम्यग्विधेयो वेदवित्तमैः ॥ ६५ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
चतुर्भिः स तु कर्तव्यो ब्राह्मणैर्वेदपारगैः ॥ ६६ ॥

SGDL

ब्रह्मचर्यं च गार्हस्थ्यं वानप्रस्थमिति त्रयम् ।
क्षत्रियाणां विधिस्तत्र कर्तव्यो वैदिकोक्तिभिः ॥६६॥
ब्रह्मचर्यं गृहस्थश्च वैश्यानामुचिताश्रमौ ।
वेदसंस्कारशून्यानां शूद्राणां नैव चाश्रमाः ॥६७॥
ब्रह्मचर्याश्रमे लोपे विधिहीने गृही भवेत् ।
प्रजाकामाय सर्वेषां प्राकृताचरणं हितम् ॥६८॥
पूर्वोक्तवैदिकाचारान्यथायोग्यं समाचरेत् ।
एतेन च फलप्राप्तिः सर्वेषां नात्र संशयः ॥६९॥
न्यायमेतं समुल्लंघ्य ये मोहादाचरंति ते ।
अधःपतनमेवात्र नास्ति तेषां कुलोचितम् ॥७०॥
धर्मं कर्म च ज्ञानं च हव्यकव्यादिकान्क्रमात् ।
विधिपूर्वं प्रकुर्वीत ब्राह्मणो गुरुमाश्रितः ॥ ७१ ॥
नष्टभ्रष्टाश्च मूर्खाश्च ब्राह्मणानामधारिणः ।
न तेषां ब्राह्मणत्वेन ग्राह्यता त्याज्यता सदा ॥७२॥
दक्षिणाधनमुद्दिश्य भ्रष्टीकुर्वन्ति भारते ।
ग्रामसूकरवत्ते तु तीर्थक्षेत्रे च याचकाः ॥ ७३ ॥
नैवास्ति किञ्चित्कर्तव्यं सत्क्रियां तैर्न कारयेत् ।
विधिहीनपरास्सर्वे संत्यजेदन्त्यजान् यथा ॥ ७४ ॥
चोरस्यान्नं नवश्राद्धं कालदानं प्रतिग्रहः ।
जीवनं काकवत्तेषां संत्यजेत् सत्क्रियाधमान् ॥७५॥



SGDF

कालदोषात्परिभ्रष्टा विद्याहीनाः कुलोत्पथाः ।
नैवास्ति किंचित्कर्तव्यं सन्त्यजेदन्त्यजं यथा ॥ ७६॥
वेदशास्त्रार्थसंपन्नाः कर्मठा ब्रह्मकर्मणि ।
अधिकारपरा धीराः कुलश्रेयस्कराश्च ते ॥७७॥
बहवः सन्ति ते सर्वे नाद्यापि प्रलयं गताः ।
तेषां निन्दा न कर्तव्या सर्वकालेऽपि मानद ॥७८॥
श्रौतस्मार्तपराः सर्वे कलिदोषापहारिणः ॥
तेषां प्रसादात्सर्वेऽपि कृतकृत्या भवन्ति ते ॥७९॥
दैवीसंपद्विमोक्षाय निबंधायासुरी मता ।
इत्येवमर्जुनं प्राह तत्र का परिदेवना ॥ ८० ॥
अतःपरं महोत्साहः कर्तव्यो बुद्धिसत्तमैः ।
उत्तरस्यां बिलद्वारे फलं संपादितुं शनैः ॥ ८१ ॥

इति श्रीचतुर्विधफलमीमांसापश्चिमद्वारं समाप्तम् ।

---

## अथ उत्तरद्वारप्रवेशः ।

दैवीसम्पत्समाप्तुं शमदमसमता क्षान्तिवैराग्यरूपा
निश्रेयःप्राप्तिकल्पा सकलगुणलताकीर्णपूर्णैरनेकैः ॥
उत्पन्नज्ञानवृद्धैर्ऋषिकुलनिकरैर्वेदवेदान्तवेद्यै-
र्योगज्ञैः सज्जनानां गमनपथि गतीर्वर्णितुं कः समर्थः॥ १॥

SGDF
Sri Gargeshwari Digital Foundation

केचिज्ज्ञानसमाधिमौनमिलितैर्नेत्रैंदुमन्दाकिनी-
स्नानं कुर्वन्तिसन्तः सपदि पुलकितैर्गात्ररोमांचितैःकैः ॥
गायन्नृत्यन्ति केचिन्मननमलमितीत्यूर्ध्वमुन्नीय चासून्
तेषामानंदसिन्धावुपरतिकथने नात्र कोप्यस्ति लोके ।२।
किश्चिद्गत्वोपविश्यविधिसमयमुखे श्रेष्ठसन्ध्यादिकर्म
कुर्वन् कश्चित्समाधौ कलयतिकवितांगायकाः केचिदन्ये॥
धन्यानां चेष्टगोप्यं कथमिह कथितं लेखितुं कःसमर्थः
तेषां तेएव जानन्त्यथ किसु कथितुं बोधितुं नैव शक्यम्३
गत्वागत्वोत्तरस्यां जपतपनियमाः श्लाघ्यदेशान्तराणि
सर्वामुर्वींसमीक्ष्य शुचिकरगिरिभिः शैलमालंब्यपश्चात्॥
कैवल्यग्रामसीम्नि सुखकरविपिने मन्दमन्दं समीरे
धन्यानां पुण्यभूमिः श्रुतिपथिनिलया चोत्तरद्वारदेशे।।४।
उद्युक्ताः शान्तिदान्त्याद्युपचितमतयस्तत्र तानेव गन्तुं
मोक्षद्वारं प्रवेष्टुं विधिविहितपराद्युन्मनीनां मुनीनां ॥
वेदान्तज्ञानिनां वै समरसमतयः सारवित्स्फूर्तिचित्ता-
स्तेषां नान्यत्कदाचित्कुलविभवबलंशाब्दिकानांखलानां
आरंभशूरास्सकलेपि भारते मोक्षाश्रमद्वारगतिप्रवेशे ।
नधर्मकर्माण्यपिस्वाश्रमाणिकृतातिरश्चीनगतिस्तदीयैः६
ये कर्मनिष्ठा विधिवादपौरुषाःपूर्वाश्रमद्वारफलान्यलभ्य
वेदांतवादोदरपूरणार्थं तेषां गतिर्नैव विमोक्षणेक्षितौ ७
यआश्रमादाश्रमकर्मनिष्ठाःप्रयान्तिपारंप्रतियातुमुद्यताः
स्वकर्मवर्णाश्रमसन्ततानिफलानिवेदांतकलानितानि ८

SGDF
Sri Gargeshwari Digital Foundation

समाश्रयेत्सद्गुरुब्रह्मनिष्ठं वरिष्ठयोगांगकलाप्रविष्टम् ॥
अनिष्टसंसारनिकृष्टदुःखं विशिष्टविद्याविनये गरिष्ठम् ९
तमाश्रित्य गुरुं पश्चाद् ब्रह्मविज्ञानसेवने ।
सुकार्यं साधयेदत्र श्रुतिसिद्धान्तसाधकः ॥ १० ॥
भक्तिर्गुरौ परमतत्त्वपदेऽनुरक्तिर्निःसंगता स्वयमुपागत-
लाभतुष्टिः । एकान्तवासपरताच मनोनिवृत्ति-
र्वेदान्ततत्त्वउपदेशमतिं ददौ ताम् ॥ ११ ॥
नित्यानित्यविचारभूमिमचलां संप्राप्य मोहाच्छिदं
भोगत्यागअमुत्रऐहिकफले यत्नः शमाद्याप्तये
मोक्षेच्छाफलमाश्रयन्ननुदिनं वेदान्तयोगेऽभ्यसन्
द्वारे चोत्तमभूमिकां परिणयन्कैवल्यमार्गाधिगः ॥१२॥
एकान्तस्थितिरिन्द्रियोपरमणं हेतुर्दमश्चेतसां
भोगेच्छा विगता विदेहमतयो विश्रामविजृंभिताः ॥
सानन्दामृतसान्द्रकेन्द्रपतयः सामन्तचक्राधिपाः ।
सानन्दे निवसन्ति सन्ततमहोद्वारोत्तरे शाश्वतम् ॥१३॥
मोक्षद्वारकपाटपाटनपटुः साक्षी परेशस्य ते ।
वीक्ष्यत्यंगणचारुकुंजनिकटे नेत्रंसमुन्मीलति ॥
आर्तत्राणपरायणाः खलु च ते धात्रीश्वरा निःस्पृहाः ।
सत्यज्ञानमहोत्सवेन नियतं मोक्षार्थिनामाशयाः ॥१४॥
एकाकी निस्पृहः शान्तो वीतशोको विनिष्क्रियः ॥
शाकमूलफलाहारो तरोर्मूलाश्रयाश्रमः ॥ १५ ॥

SGDF

मुनिः कौपीनवासो वा नग्नो वा ध्यानतत्परः ।
परमानन्दसन्दोहकन्दकन्दरमन्दिरे ॥ १६ ॥
वीतशोकभयायासो निरीहश्छिन्नसंशयः ॥
यस्तिष्ठति गतोऽव्यग्रस्सोहं सच्चित्सुखात्मकः ॥ १७ ॥
अशरीरी शरीरस्थो कालसन्ध्याद्यातिक्रमः ॥
स कालवंचको योगी स योगी योगिनां वरः ॥ १८ ॥
अप्रतर्क्यमथाद्वंद्वं स्वप्रकाशं परं पदम् ॥
अखण्डप्रज्ञयादेहे बुद्धिग्राह्यमतीन्द्रियम् ॥ १९ ॥
नित्यशुद्धं परं ब्रह्म सच्चिदानन्दमद्वयम् ॥
बुद्धमुक्तमहावाक्यश्रुतिसिद्धान्तसम्मतम् ॥ २० ॥
मननेन महावाक्यनिदिध्यासनतत्पराः ॥
साक्षात्कारपरा भूत्वा पारं गच्छन्तु योगिनः ॥ २१ ॥
शास्त्राचार्यमहावाक्यसाक्षिचैतन्याविग्रहे ॥
चैत्यहीने चिदाभासरहिते विहिते परे ॥ २२ ॥
धन्विनो ये नियुज्यन्ते चित्तैकाग्र्यं शराग्रवत् ॥
लयमक्षय्यमद्वंद्वे त्रिकूटस्थे परात्मनि ॥ २३ ॥
अजममरमनाद्यमाद्यमेकं पदममलं सकलं च निष्कलं
च । स्थित इति स तदा नभस्वरूपा-
दति विमलस्थितिरीश्वरेक्षणेन ॥ २४ ॥
व्यपगतकलनाकलंकशुद्धःस्वयममलात्मनिपावनेपदेऽसौ
सलिलकणइवांबुधौमहात्माविगालितवासनएकतांजगाम

SGDF Sri Gargeshwari Digital Foundation

ब्रह्मानन्दरसं पिबन्ति यतयः सन्तस्समेत्याधुना ।
योगध्यानविधेन धीधृतबहिःष्वंगप्रसंगेषु च ॥
एतान्पंचसु पूर्वभागविषयानभ्यस्य गुर्वाज्ञया
योगाभ्यासविशारदा वितनुतां मार्गत्रयीं चोत्तराम्॥२६

सलिले सैन्धवं यद्वत्साम्यं भजति योगतः ॥
तथात्ममनसोरैक्यं समाधिरभिधीयते ॥ २७ ॥
ब्रह्माकारमनोवृत्तिप्रवाहोहंकृतिं विना ॥
संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ २८ ॥
यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥ २९ ॥
मारुते मध्यसञ्चारे मनःस्थैर्यं प्रजायते ॥
यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी ॥ ३० ॥
संशान्तसर्वसंकल्पा या शिलावदवस्थितिः ॥
जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपा स्थिति परा ॥ ३१ ॥
समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मसुखं यथा भवेत् ॥
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते ॥ ३२ ॥
किमपि सततबोधं केवलानन्दरूपं
निरुपममतिवेलं नित्यमुक्तं निरीहम् ॥
निरवधिगगनाभं निष्कलं निर्विकल्पं
हृदि कलयति विद्वान् ब्रह्म पूर्णं समाधौ ॥ ३३ ॥

SGDF Sri Gargeshwari Digital Foundation

अस्मिन्भारतखण्डमण्डितमहाभूमण्डले मण्डपे
मार्गैस्तैश्च तुरंगगोपुरतलस्यान्तःपूरे प्रांगणे ॥
प्रादाक्षिण्ये पुराग्रे सुपथि मतिगतिर्वर्त्तुले प्रस्फुरन्ती
मेरोः पृष्ठेमहान्ते विधिपथि निलयं ह्युन्नतंचोर्ध्वगानाम्
अत्रस्था गिरिमौलिमण्डपमहाकैलासशैलोत्तमे
भर्गत्र्यंबकसांबिकावरहरं गंगाधरं शंकरम् ॥
मोक्षश्रीमयकान्तिगौरवमणिस्त्रान्ते महेशं परं
साक्षात्कारयितुं समाधिमचलां कुर्वन्ति चान्तर्मुखाः३५
चित्तमूलो विकल्पोयं चित्तभावेन कश्चन ॥
अंतश्चित्तं समाधेहि प्रत्यग्रूपे परात्मनि ॥ ३६ ॥
यत्र प्रविष्टा विषयाः परेरिता नदीप्रवाहा इव वारिराशौ
लीयंतिसन्मात्रतयाविनिष्क्रियामुत्पादयन्नेषयतिर्विमुक्तः
मुहूर्तमपि योमश्चेन्नासाग्रे मनसा सह ॥
दक्षिणे पिंगला नाडी वह्निमण्डलगोचरा ॥ ३८ ॥
देवयानमिति ज्ञेया पुण्यकर्मानुसारिणी ॥
इडा च वामनिःश्वाससोममण्डलगोचरा ॥ ३९ ॥
गुदस्य पृष्ठभागेऽस्मिन् वीणादण्डस्य देहभृत् ॥
दीर्घास्ति मूर्ध्नि पर्यन्तं ब्रह्मनाडीति कथ्यते ॥ ४० ॥
इडापिंगलयोर्मध्ये सुषुम्णा सूक्ष्मरूपिणी ॥
तस्याग्रे सर्वगं सर्वं यस्मिन्सर्वं प्रतिष्ठितम् ॥ ४१ ॥
तस्य मध्यगताः सूर्यसोमाग्निपरमेश्वराः ॥
भूतलोकाः शिवक्षेत्रं समुद्राः पर्वताश्शिलाः ॥ ४२ ॥

SGDF
Sri Gargeshwari Digital Foundation

द्वीपाश्च निम्नगा वेदाः शास्त्रविद्याकलाक्षराः ॥
स्वरमन्त्रपुराणानि गुणाश्चैते च सर्वशः ॥ ४३ ॥
बीजं [illegible] कास्तेषां क्षेत्रज्ञाः प्राणवायवः ॥
सुषुम्नान्तर्गतं विश्वं तस्मिन्सर्वं प्रतिष्ठितम् ॥ ४४ ॥
घटाकाशमिवात्मानं विलयं वेत्ति तत्त्वतः ॥
स गच्छति निरालंबं ज्ञानलोकं न संशयः ॥ ४५ ॥
ततः सर्वेषु कालेषु योगमभ्यस्य बुद्धिमान् ॥
निर्वाणमुत्तरद्वारफलं प्राप्य सुखी भवेत् ॥ ४६ ॥

भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ये ॥
नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित्प्रकाशताम् ॥ ४७ ॥

अस्त्यद्यापि चतुःसमुद्रपरिखापर्यन्तमुर्वीतलं
वर्तन्तेऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः ॥
एकस्तत्र निरादरो भवति चेदन्यो भवेत्सादरो
वाग्देवी वदनाम्बुजे वसति चेत्को नाम दीनो जनः ४८
अस्मिन्भारतखण्डमण्डपमहाद्वारे चतुर्थे पुरे
धर्मार्थादिफलानि च प्रतिदिशन्वर्णाश्रमादिक्रमात् ॥
वेदान्तप्रतिपादनादिसहितं योगांगसांगक्रमात्
प्रत्याख्यानपुरस्सरं कृतमिदं प्रेम्णैवमित्यर्प्यते ॥ ४९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्ययोगीन्द्रवर्यआत्मानन्दसरस्वतीस्वामिभिर्विरचितायां चतुर्विधफलमीमांसायामुत्तरद्वारंसमाप्तम् ।

SGDF
Sri Gargeshwari Digital Foundation

# चतुर्विधफलमीमांसादर्शने पंचम प्रकरणम् ।



बीजंसंसृतिभूमिजस्य तु तमो देहात्मधीरंकुरो रागःपल्लवमम्बुकर्मतुवपुःस्कन्धोऽथवाक्शाखिकाः॥अग्राणीन्द्रियसंहतिश्च विषयाः पुष्पाणि दुःखं फलं नानाकर्मसमुद्भवं बहुविधंभोक्तात्रजीवःखगः ॥ १ ॥

विवेकवैराग्यगुणातिरेकाच्छुद्धत्वमासाद्य मनोविमुक्तये ॥ भवत्यतो बुद्धिमतो मुमुक्षोस्ताभ्यांद्रढाभ्यां भवितव्यमग्रे ॥ २ ॥

बालस्य वा विषयभोगरतस्य वापि मूर्खस्य सेवकजनस्य गृहस्थितस्य॥एतद्गुरोःकिमपि तत्र न चिंतनीयं रत्नं कथं त्यजति कोप्यशुचौ प्रविष्टम्॥३ ॥

प्रमथ्यवज्रोपम युक्तिसंभृतैः श्रुतेररातीन् शतशो वचोभिः' ॥ ररक्ष वेदार्थविधिंविशालधीर्नमो यतीन्द्राय गुरोर्गरीयसे ॥ ४ ॥



SGDF
Sri Gargeshwari Digital Foundation

ततः पवित्रं परमेश्वराख्यमद्वैतरूपंविमलांबराभम्॥
[illegible]दके तोयमनुप्रविष्टं तथात्मरूपो निरुपाधि-
संस्थितः ॥ ५ ॥

अल्पानल्पप्रपंचप्रलय उपरतिश्चेन्द्रियाणां सुखास्ति
जींवन्मुक्तौ सुषुप्तौत्रितयमपि समं किंतु तत्रास्ति भेदः॥
प्राक्संस्कारप्रसुप्तः पुनरपिचपरावृत्तिमेतिप्रबुद्धो न-
श्यत्संस्कारजातो न स किल पुनरावर्त्तते यश्चमुक्तः ६॥
तद्ब्रह्मैवाहमस्मीत्यनुभव उदितो यस्यकस्यापि चेद्वै
पुंसः श्रीसद्गुरूणामतुलितकरुणापूर्णपीयूषदृष्ट्या ॥
कूटस्थो नैव जीवो श्रुतिगुरुवचसा साक्षिभूतः शिवोहं
जीवात्मा ब्रह्मभेदं दलयति सहसा स्वप्रकाशैकरूपे ॥७॥

आत्मानन्दपदप्रवेशकलनमात्मानमात्मा स्वयम्
जातं मय्येव सर्वं पुनरपि मयि तत्संस्थितं चाहमस्मि॥
सर्वे वेदान्तसिद्धा अहमिदमुत भेदेन जीवेतिभानम्
मानं मे ये परात्मन्यहमिति गलिते जीवभेदः कथं
स्यात् ॥ ८ ॥

SGDF
Sri Gargeshwari Digital Foundation

आत्मानात्मा परात्मा प्रभवति जगति त्रैगुणैर्विश्वमेते
बध्नन्त्यज्ञानजन्तून्मदजनविषयाकारिणां द्वैतभेदात्॥
अद्वैते पारमार्थे परमगुरुमुखाच्छ्रौतयुक्त्या परात्मन्यैक्ये
भेदं कदापि न भवति भजतामात्मनि स्वात्मदृष्ट्या॥९॥

श्रुतार्थापत्तिर्यथा "तरति शोकमात्मविद्" इति शोकोपलक्षितप्रमातृत्वादिबन्धस्य ज्ञाननिवर्त्यत्वं श्रुतम्॥ तस्य मिथ्यात्वमन्तरेण सत्यत्वे अनुपपन्नं सन्मिथ्यात्वं कल्पयति सेयं श्रुतार्थापत्तिः ॥ अन्तःकरणविशिष्ट चैतन्यं प्रमाता कर्ता भोक्ता केवलस्यात्मनोऽसङ्गत्वेन प्रमातृत्वाद्यनुपपत्तेः शुक्तिरजतवदात्माऽज्ञानादन्तःकरणादिकस्वरूपेण प्रत्यगात्मन्यध्यस्तम् अध्यासो नाम परस्य परत्रावभासःशुक्तिरजतादिवत्सच्चिदानन्दे ब्रह्मणि प्रपञ्चारोपः कर्तृत्वभोक्तृत्वप्रवर्त्तकतया पूर्वदृष्टसजातीयोऽर्थाध्यासः सोऽपि द्विविधः "व्यावहारिकः पारमार्थिकश्चेति" तत्रागन्तुकदोषजन्यः प्रातिभासिको यथा शुक्तिरजतादिः प्रातीतिकभिन्नो व्यावहारिकः यथाऽकाशादिघटान्तं जगत् तथा च प्रमातृत्वादि-

SGDF
Sri Gargeshwari Digital Foundation

बन्धस्याध्यस्ततया मिथ्यात्वमुपपद्यते एतदभिप्रायेणोक्तं भगवता भाष्यकारेण स्मृतिरूपपरत्रपूर्वदृष्टावभासः सजातीयावभास इति । अस्यार्थः—स्मृतिरूपः संस्कार-जन्यत्वेन स्मृतिसदृशः पूर्वदृष्टावभासः पूर्वदृष्टसजातीयस्तदिदमिति योवभास इति ज्ञानाध्यासपक्षे तथा अर्थाध्यासपक्षे तु प्रमाणजन्यज्ञानविषयः पूर्वदृष्टस-जातीयावभासित इति एवं श्रुतार्थापत्तिर्निरूपिता अभा-वप्रमायोग्यानुपलब्धिकरणिका "यथा आचार्यस्तूहा-पोहग्रहणधारणशमदमदयानुग्रहादिसंपन्नो लब्धागमो दृष्टादृष्टभोगेष्वनासक्तः वास्तवसर्वकर्मसाधनो ब्रह्म-वित् ब्रह्मणि स्थितोऽभिन्नवृत्तो दंभदर्पकुहकशा-ठ्यमायामात्सर्यानृताहंकारममत्वादिदोषवर्जितः केव-लपरानुग्रहप्रयोजनो विद्योपयोगार्थी पूर्वमुपदिशेत्" "सदेवसौम्येदमग्रआसीदेकमेवाद्वितीयम्" "यत्र नान्य-त्पश्यति" "आत्मैवेदं सर्वम्" "आत्मा वा इदमेक एवाग्र आसीत्" "सर्वं खल्विदं ब्रह्म" इत्याद्याः आत्मै-क्यप्रतिपादनपराः श्रुत्युपदेशमहावाक्यस्मरणेनोपादिश्य

SGDF Sri Gargeshwari Digital Foundation

च ग्राहयेत् । ब्रह्मणो लक्षणं आचार्यवान्पुरुषो वेदोपदिष्टः "विज्ञानमानन्दं ब्रह्म प्रज्ञाप्रतिष्ठाप्रज्ञानं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म अदृश्येऽनात्मे स वा एष महानज आत्मा अप्राणो ह्यमनाः स बाह्याभ्यन्तरो ह्यजः" इत्यादिस्वरूपसाक्षात्कारश्रुतिभिः तथा स्मृतिभिश्च "नजायते नो म्रियते वा नादत्ते कस्यचित्पापम् यथाकाशास्थितो नित्यम्" "क्षेत्रज्ञं चापि मां विद्धि नसत्तन्नासदुच्यते" "अनादित्वान्निर्गुणत्वात् समं सर्वेषु भूतेषु उत्तमः पुरुषः" इत्याद्याःस्मृतयश्च श्रुत्युक्तलक्षणाऽविरुद्धाः ।

एवं श्रुतिस्मृतिभिः गृहीतपरमात्मलक्षणो मुमुक्षुः संसारसागरादुत्तितीर्षुः ब्रह्मावगतिर्निः श्रेयसफलं प्राप्तुं प्रवृत्तः पुरुषः प्रयत्नसाध्यात्मलाभाय आचार्यकुलं प्रविशेत् ।

SGDF
Sri Gargeshwari Digital Foundation

# आचार्योपदेशोत्र ।

समापय्य क्रियाः सर्वा दाराग्न्याधानपूर्विकाः ॥ ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रमे ॥ १ ॥ कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये ॥ ध्रुवे स्यातां ततो रागो द्वेषश्चैव ततः क्रियाः ॥ २ ॥ धर्माधर्मौ ततोज्ञस्य देहयोगस्तथा पुनः ॥ एवं नित्यप्रवृत्तोऽयं संसारचक्रवद्भृशम् ॥ ३ ॥ इत्याचार्योक्तलक्ष्ये तन्निवृत्तिर्मोक्षइत्यनुसन्धेयम्।तत्र ज्ञानोत्पत्तिप्रातिबन्धककर्मसामग्र्यप्रेक्षया'नहि ज्ञानेन सदृशंपवित्रामिह विद्यते'इति स्मृतिनिर्देशे तथा ज्ञाने परिसमाप्यतेइतिस्मृतिदर्शनेपि सत्यमेवं 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः'इत्याकारकस्वरूपसांप्रदायकसंन्यासाश्रमस्वीकारो संन्यस्य श्रवणं कुर्यादित्यन्तेन ग्रन्थेन मोक्षसाधनं श्रवण मननादिपरिपाकातिशयरूपमवस्थान्तरत्वं मुनित्वमुद्दिश्य अपरोक्षसाक्षात्कारश्रुतिमहावाक्यमनने मनस्यभ्यासपाटवेभ्रमरकीटकन्यायेनशरीरत्रयमुत्सृज्य संन्यासेनैव देहत्यागं करोति स एवं पूज्य इति प्रतिपादनपरम्परयाश्रुतिशास्त्रवैदिकाचार्याणांसार्वदेशिकमतामिदमनुगृह्णन्तु मुनीन्द्राः ।

SGDF Sri Gargeshwari Digital Foundation

तत्राथातःशद्बद्योतनमधिकारपरत्वं गुरुत्वमेव दर्शयति‘अथातो’ “अथयोगानुशासनम्” “अथमुमुक्षो” इत्याद्यथ शब्दोऽधिकारपरत्वएवांगीक्रियते श्रुत्यापि अथानुप्रश्नाः इत्याद्यागमतात्पर्ये वेदान्तश्रवणेपि कृतकृत्यकर्मांगसांगाध्ययनशीलमननसामर्थ्यं विना कपटलंपटचटुलसामर्थ्यपराः नैवाह्याः तत्रश्रुतिप्रमाणमवतरति ‘नायमात्मा बलहीनेन’ अन्यत्र श्रुतिः “सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्” इत्याद्याः द्रष्टव्याः ॥ दत्तमस्यां चतुर्विधफलमीमाँसायां कृपापात्रपरत्वं पाखण्डध्वंसपर्यालोचनया पूर्वाचारवेदवेदान्ताचार्याधिनं ज्ञानमंगीकृत्य सेयं गुटिका पराविद्या विषविषमाविषूचिकाविर्भूतमलमलिनान्तः करणरोगव्यपोहनं भारतीयानां चातुर्वर्णाश्रमाणां भैषजामिदमनुगृह्णन्तुभवन्तः ॥

“ अलं प्रसंगगौरवेण ”

---

SGDF
Sri Gargeshwari Digital Foundation

